मनुष्य अहरहः पठति = प्रतिदिन पढ़ता है सः = वह यो यो यां यां तनु भवत ..... म तया श्रद्धया युक्तस्तस्याराधनमीष्ते लभते च तत. कामान् मयैव विहितान् के अनुसार शिवलोके = शिवलोक मे रुद्रतुल्य=रुद्र समान भवति = होगा तथा=और अत्र = यहा प्रचुरतरधनायु = धनी एव दीर्घायु पुत्रवान् च कीर्तिमान् पुत्रवान् और कीर्तिमान् भवति होगा ॥ ३४ ॥

दीक्षा दानं तपस्तीर्थ-स्नानं यागादिकाः क्रियाः ।
महिम्नस्तवपाठस्य कलां नार्हन्ति षोडशीम् ॥ ३५ ॥

आसमाप्तमिदं स्तोत्रं सर्वमीश्वरवर्णनम् ।
अनौपम्यं मनोहारि पुण्य गन्धर्वभाषितम् ॥ ३६ ॥

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ ३७ ॥

कुसुमदशननामा सर्वगन्धर्वराजः
शशिधरवरमौलेर्देवदेवस्य दासः ।
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥ ३८ ॥

सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः ।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥ ३९ ॥

श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन
स्तोत्रेण किल्बिषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥ ४० ॥

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन देवेश· प्रीयतां मे सदाशिवः ॥ ४१ ॥

यदक्षर पदं भ्रष्टं मात्राहीन च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ ४२ ॥

ॐ पूर्णमदं पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

( अनुवादका अन्तिम पद्य )

इयं श्रीकाशिकानन्दयतेर्विजयते कृतिः ।
चन्द्रिकेव सतां नित्य चेतः कुमुदिनीवने ॥

समाप्तमिद सानुवाद महिम्न- स्तोत्रम्

शुभ भूयात् ॥

